क्रियोत्पादनद्वारेणास्ति रजसः कारणत्वमिति न व्यर्थं रज” इतित०कौ०। तिज निशाने इत्यस्मादसुन् तेन तेजसा कृतः तैजसः रजसश्च सत्वतमसोः स्वस्वतेजकार्य्यसमर्थत्वकरणरूपतैक्ष्ण्यकरणगुणयोगात् तेजःपदाभिधेयता इति तदाशयः “तैजसादिन्द्रियाण्यासन्” शा०ति० । सत्त्वगुणस्य प्रकाशकत्वात् “तैजसमन्तःकरणमिति” वेदान्तप० । ४तीर्थभेदे न० “तैजसं नाम तत्तीर्थं यत्र तीर्थेस्वपां पतिः। अभिषिक्तः सुरगणैर्वरुणो भरतर्षभ !” भा०श०४७ अ० एतद्व्यष्ट्युपहितं चैतन्यं तैजसो भवति। तेजोमयान्तःकरणोपहितत्वात्” वेदान्तसारोक्ते ५चैतन्यभेदे पु०।

**तेजसावर्त्तनी** स्त्री तैजसं धातुद्रव्यमावर्त्त्यतेऽत्र आ+वृत णिच्—आधारे ल्युट् ङीप्। मूषायाम् ।(मुची) अमरः

**तैतल** पु० ऋषिभेदे ततः तिका० अपत्ये फिञ्। तैतलायनि तदपत्ये पुंस्त्री ।

**तैतिक्ष** त्रि०तितिक्षा शीलमस्य छत्रादि० ण। तितिक्षाशीले ।

**तैतिक्ष्य** पुंस्त्री० तितिक्षस्य ऋषिभेदस्य गोत्रापत्यं गर्गा० यञ्। तितिक्षर्षिगोत्रापत्ये तस्य छात्राः कण्वा० अणि यञो लोपः। तैतिक्षाः तैतिक्ष्यस्य छात्रेषु ब०व०।

**तैतिर** पुंस्त्री० तैत्तिर पृषो० । (तितिर) खगे राजनि०। स्त्रियां ङीष्।

**तैतिल** पु० १गण्डकपशौ। २ववादितस्तुर्थे करणे न० मेदि०। ३देवे च। “शक्तिसदृशेन दानेनावाधितधरणीतलतैतिलगणः” दशकु०। तैतिलशब्दस्य कद्रूशब्देन समासे पूर्वपदप्रकृतिस्वरः।

**तैतिलिन्** पु० गोत्रप्रवर्त्तकर्षिगणस्यप्रवरभेदे ।

**तैत्तिर** न० तित्तिरीणां समूहः अण्। तित्तिरखगसमूहे। तित्तिर+स्वार्थे अण्। (तितिर)खगभेदे पुंस्त्री राजनि०। गण्डकपशौ च मेदि०।

**तैत्तिरि** पु० कुकुरवंश्यनृपभेदे। “कुकुरस्य सुतो धृष्णुर्धृष्णोऽस्तु तनयस्तथा। “कपोतरोमा तस्याथतैत्तिरिस्तनयोऽभवत्”। हरिवं० ३८अ०। २ऋषिभेदे। आद्यः कठस्तैत्तिरिश्च वैशम्पायनपूर्वजः” भा० शा० ३३८ अ०। ३कृष्णयजुःप्रवर्त्तके ऋषिभेदे ।

**तैत्तिरीय** पु०ब०व०तित्तिरिणा प्रोक्तमधीयते छण्। १तित्तिरिप्रोक्तशा... ...ार्थं क। तैत्तिरीयकास्तत्रार्थे। यजुःशाखाभेदे। तन्नामनिरुक्तिः यथा।
“देवरातसुतः सोऽपि छर्द्दित्वा यजुषां गणम्। ततो गतोऽथ मुनयोददृशुस्तान् यजुर्गणान्। यजूंषि तित्तिराभूत्वा तल्लोलुपतया ददुः। तैत्तिरीया इति यजुःशाखा आसन् सुपेशलाः” भाग० १२।

**तैन्तिडीक** त्रि० तिन्तीडिकेन संस्कृतम् कोपधत्वात् अण्। तिन्तिड़ीकसंस्कृतव्यञ्जनादौ। तस्य विकारः कोपधत्वात् अण्। २तिन्तिड़ीकविकारे च।

**तैमिर** तिमिरमेव अण्। नेत्ररोगभेदे “शैसं हन्यात्सैन्धवाच्यकाचान् नीलीरोगं तैमिराञ्जनेन” सुश्रु०। तैमिरो रोगोऽस्त्यस्य ठन् तैमिरिकः। तिमिररोगार्त्ते। “न वामयेत्तैमिरिकोर्द्ध्ववातगुल्मोदरप्लीहकृमिश्रमार्त्तान्” सुश्रु०। “तैमिरिका इवादूरदर्शिनम्” काद०।

**तैर** न० तीरे भवः अण्। कूलस्थे राजनि०।

**तैरणी** स्त्री तीरे नमति नम—वा०ड ततः स्वार्थे अण् गौरा० ङीष्। कुनील्यां रागदे क्षुपभेदे। [तिर्यग्जातिसम्बन्धिनि

**तैरश्च** त्रि०तिरश्चामिदम् तिर्य्यच् अण्+भत्वात् तिरश्चादेशः।

**तैर्थ** त्रि० तीर्थे दीयते कार्य्यं वा व्यु०टा० अण्। १तीर्थे देये २तीर्थकार्य्ये च तीर्थात् आयस्थानादागतः शुण्डिका० अण्। तीर्थरूपायस्थानादागते द्रव्यादौ च।

**तैर्थक** त्रि० तीर्थे देशे भवः धूमा० वुञ्। तीर्थदेशभवे।

**तैर्थिक** त्रि० तीर्थं सिद्धान्तनिश्चयं नित्यमर्हति छेदा० ठञ्। १तीर्थसिद्धान्ताभिज्ञे शास्त्रकरे कपिलकणादादौ तीर्थं वेत्ति ठञ् वा। २सिद्धाभिज्ञे। तीर्थे भवः ठञ्। ३तीर्थभवे। “तैर्थिकाभुञ्जते यस्तु मणिनागस्य” भा०अ०८५ श्लो०।

**तैर्थ्य** त्रि० तीर्थ+चतुरर्थ्यां० सङ्का० ण्य। तीर्थसमीपादौ।

**तैर्य्यगयनिक** त्रि० तिरश्चामयनं सत्रभेदः तदेव ठञ्। सत्रभेदे। “अष्टादशभिर्ज्यायानादित्यः संवत्सर एव तैर्य्यगयनिको भवति। आदित्यः खलु शश्वदेकदा षण्मासानुदङ्ङेति नव चाहानि तथा दक्षिणा” श्रुतिः।

**तैर्य्यग्योन** त्रि० तिर्य्यग्योनेरिदम्+अण्। तिर्य्यग्योनीनां पश्वादीनां सम्बन्धिनि सर्गभेदे।
“अष्टविकल्पो दैवस्तैर्य्यग्योनश्च पञ्चधा भवति। मानुष्यश्चैकविधः समासतो भौतिकः सर्गः” सा० का० तैर्य्यग्योनश्च पञ्चधा भवति पशुमृगपक्षिसरीसृपस्थावरात्मकः” त० कौ०। तत्र भवः अण्। तद्योनिभवे। “निन्दन्त्यवमता मन्त्वं तैर्य्यग्योनास्तथैव च” मनुः।

**तैल** न० तिलस्य तत्सदृशस्य वा विकारः अञ्। तिलसर्षपादिजनिते स्नेहद्रव्यभेदे। तल्लक्षणादिकं भावप्र० उक्तं यथा “तिलादिस्निग्धवस्तूनां स्नेहस्तैलमुदाहृतम्। तत्तु वातहरं सर्वं विशेषात्तिलसम्भवम्। अथ तिलतैलगुणाः

"तिलतैलं गुरु स्थैर्य्यबलवर्णकरं सरम्। वृष्यं विकाशि विशदं मधुरं रसपाकयोः। सूक्ष्मं कषायानुरसं तिक्तं वातकफापहम्। वीर्य्येणोष्णं हिमं स्पर्शे बृंहणं रक्तपित्तकृत्। लेखनं बद्धविण्मूत्रं गर्भाशयविशोधनम्। दीपनं बुद्धिदं मेध्यं व्यवायि व्रणमेहनुत्। श्रोत्रयोनिशिरःशूलनाशनं लघुताकरम्। त्वच्यं केश्यञ्च चक्षुष्यमभ्यङ्गे भोजनेऽन्यथा। छिन्नभिन्नच्युतोत्पिष्टमथितक्षतपिच्चिटे। भग्नस्फुटितविद्धाग्निदग्धविश्लिष्टदारिते। तथाभिहतनिर्भुग्ने मृगव्याघ्रादिविद्रुते। वस्तौ पानेऽन्नसंस्कारे नस्ये कर्णाक्षिपूरणे। सेकाभ्यङ्गावगाहेषु तिलतैलं प्रशस्यते"। ननु बृंहण लेखनयोः कथं सामानाधिकरण्यमित्यत आह। "सूक्ष्मादिदुष्टः पवनः स्रोतः सङ्कोचयेद्यदा। रसोऽसम्यग्वहन् कार्श्यं कुर्य्याद्रक्ताद्यवर्द्धयन्। तेषु प्रवेष्टुं सरता सौक्ष्म्यस्निग्धत्वमार्दवैः। तैलं क्षमं रसं नेतुं कृशानां तेन बृंहणम्। व्यवायि सूक्ष्मतीक्ष्णोष्ण सरत्वैर्मेदसः क्षयम्। शनैः प्रकुरुते तैलं तेन लेखनमीरितम्। द्रुतं पुरीषं बध्नाति स्खलितं तत्प्रवर्त्तयेत्। ग्राहकं सारकञ्चापि तेन तैलमुदीरितम्। घृतमब्दात्परं पक्वं हीनवीर्य्यं प्रजायते। तैलं पक्वमपक्वं वा चिरस्थायि गुणाधिकम्"। सर्षपतैलगुणाः। "दीपनं सार्षपं तैलं कटुपाकरसं लघु। लेखनं स्पर्शवीर्य्योष्णं तीक्ष्णं पित्तास्रदूषकम्। कफमेदोऽनिलार्शोघ्नं शिरःकर्णामयापहम्। कण्डूकुष्ठकृमिश्वित्रकोठदुष्टकृमिप्रणुत्"।

राजिकातैलगुणाः "तद्वद्राजिकयोस्तैलं विशेषान्मूत्रकृच्छ्रकृत्"। राजिकयोः (कृष्णाराई) (आरक्तराई) द्वयोः। तुवरी(तोरी)तैलगुणाः "तीक्ष्णोष्णं तुवरीतैलं लघु ग्राहि कफास्रजित्। वह्निकृद्विषनुत्कण्डूकुष्ठकोठकृमिप्रणुत्। मेदोदोषापहञ्चापि व्रणशोथहरं परम्"। अतसीतैलगुणाः "अतसीतैलमाग्नेयं स्निग्धोष्णं कफपित्तकृत्। कटुपाकमचक्षुष्यं बल्यं वातहरं गुरु। मलकृद्रसतः स्वादु ग्राहि त्वग्दोषनुद्घनम्। वस्तौ पाने तथाभ्यङ्गे नस्ये कर्णस्य पूरणे। अनुपानविधौ चापि प्रयोज्यं वातशान्तये। वरटेः तैलगुणाः "कुसुम्भतैलमम्लं स्वादुष्णं गुरु विदाहि च। चक्षुष्यमहितं बल्यं रक्तपित्तकफप्रदम्। खस (खाखस) वीजतैलस्य गुणाः। "तैलं तु खसवीजानां बल्यं वृष्यं गुरु स्मृतम्। वातघ्नं कफहृच्छीतं स्वादुपाकरसं च तत्"। एरण्डतैलगुणाः "एरण्डतैलं तीक्ष्णोष्णं दीपनं पिच्छिलं गुरु। वृष्यं त्वच्यं वयःस्थापि मेधाकान्तिबलप्रदम्। कषायानुरसं सूक्ष्मं योनिशुक्रविशोधनम्। विस्रं स्वादु रसे पाके सतिक्तं कटुकं सरम्। विषमज्वरहृद्रोगपृष्ठगुह्यादिशूलनुत्। हन्ति वातोदरानाहगुल्माष्ठीलाकटीग्रहान्। वातशोणितविड्बन्धव्रध्नशोथामविद्रधीन्। आमवातगजेन्द्रस्य शरीरवनचारिणः। एक एव निहन्तायमेरण्डस्नेहकेशरी"। रालतैलगुणाः "तैलं सर्जरसोद्भूतं विस्फोटव्रणनाशनम्। कुष्ठपामाक्रिमिहरं वातश्लेष्मामयापहम्"। सर्वतैलगुणाः "तैलं स्वयोनिगुणकृद्वाग्भटेनाखिलं मतम्। अतःशेषस्य तैलस्य गुणाज्ञेयाः स्वयोनिवत्"। "प्रातः स्नाने व्रते श्राद्धे द्वादश्यां ग्रहणे तथा। मद्यलेपसमं तैलं तस्मात्तैलं विवर्जयेत्" कर्मलोचन०। "घृतञ्च सार्षपं तैलं यत्तैलं पुष्पवासितम्। अदुष्टं पक्वतैलञ्च तैलाभ्यङ्गे च नित्यशः" तिथ्या० त० वारविशेषे तैलग्रहणफलं यथा।

"अर्के नूनं दहति हृदयं कीर्त्तिलाभश्च सोमे भौमे मृत्युर्भवति नियतं चन्द्रजे पुत्रलाभः। अर्थग्लानिर्भवति च गुरौ भार्गवे शोकयुक्तस्तैलाभ्यङ्गात्तनयमरणं सूर्य्यजे दीर्घमायुः" ज्यो०त०। "हस्तादष्टगुणं तैलं मर्दयेन्न तु खादयेत्" वैद्यक०। स्वल्पे कन्। तैलक स्वल्पतैले न०।

**तैलकन्द** पु० तिलस्यायम् अण् तैलः तिलसम्बन्धी कन्द इव कन्दोऽस्य। तिलचित्तपत्रके वृक्षभेदे "तैलकन्दः कटूष्णश्च लौहद्रावकरो मतः। मारुतापस्मारविषशोफनाशकरश्च सः। रसस्य बन्धकारी च देहसिद्धिकरस्तथा" राजनि०

**तैलकल्कज** पु० तैलात् तिलसम्बन्धिनः कल्काज्जायते जन-ड। तिलकल्कजाते (तेलेर काट) तैलकिट्टे राजनि०।

**तैलकार** पु० तैलं करोति कृ-अण् (तेली) (कलु) इति प्रसिद्धे वर्णसङ्करे चाक्रिके तैलिनि। स च कोटकस्त्रीगर्भे कुम्भकाराज्जातः सङ्कीर्णजातिभेदः ब्रह्मवै० ब्रह्मख०

**तैलकिट्ट** न० ६त०। तैलमले (काट) इति ख्याते।

**तैलकीट** पु० कीटभेदे राजनि०।

**तैलक्य** न० तिलकस्य भावादौ पुरोहि० यक्। तिलकभावे।

**तैलङ्ग** पु० "श्रीशैलं तु समारभ्य चोलेशान्मध्यभागतः। तैलङ्गदेशो देवेशीत्युक्ते १देशे। २तद्देश्ये जने ब०व०। शब्दरत्ना०

**तैलचोरिका** स्त्री तैलं चोरयति चुर-ण्वुल् पृषो०। तैलपायिकायाम् (तेलापोका)। पृषो०। तैलचौरिकाप्यत्र।

**तैलद्रोणी** तैलपूर्णा द्रोणी शा०त०। "आकण्ठपर्य्यन्तमवगाहार्थं

तैलपूर्णे काष्ठादिनिर्मिते पात्रविशेषे। तत्रावस्थिति-गुणाः। वातरोगव्याधिकुष्ठरोगपङ्गुत्वाधिर्यंत्रर्मान्मनगद्गद-कम्पङ्कस्तम्भपृष्ठप्रचलितपवनगात्रकम्पकपाटीग्रीवाभङ्गाप-तन्त्रक्षयरुधिरभवमूत्रकृच्छ्रवस्तिरोगेषु हितत्वमिति" राजवल्लभः।

**तैलधान्य** न॰ तैलोपयोगि धान्यं सतुषं शस्यम्। "तिलोऽ-तसी च तोरी (डी) च त्रिविधस्यापि सर्षपः। द्विधा राजी खसश्चैव वीजं कौसुम्भसम्भवम्। एतानि तैल-धान्यानीत्युक्तेषु तिलादिषु।

**तैलपक** पु॰ तैलं पिबति पा—क स्वार्थे क। तैलपायिकाख्ये पक्षयुक्ते कीटे। तैलहरणे तज्जातिप्राप्तिर्मनुनोक्ता यथा "मांसं गृध्रो वपां मद्गुस्तैलं तैलपकः खगः" [भावप्र॰।

**तैलपर्णक** पु॰ तैलाक्तमिव पर्णमस्य कप्। ग्रन्थिपर्णवृक्षे

**तैलपर्णिक** न॰ तैलपर्णो गिरिभेद उत्पत्तिस्थानत्वेना-स्त्यस्य ठन् तैलाक्तं पर्णमस्त्यस्य ठन् वा। १हरिचन्दने अमरः। तिलपर्णः इच्छ उत्पत्तिस्थानत्वेनास्त्यस्य ठन्। २चन्दनभेदे।

**तैलपर्णी** स्त्री तिलपर्णो गिरिस्तत्र भवः अण् ङीप्। १चन्दने २श्रीवासे ३शिल्हके च मेदि॰। स्वार्थे क। तैलपर्णिका तत्रार्थे। "कालियकादुकूलास्य हिङ्गवस्तैलपर्णिकाः" हरिवं॰ २२१अ॰। [राजनि॰।

**तैलपा** स्त्री तैलं पिबति पा—क। (तेलापोका) कीटभेदे।

**तैलपायिका** स्त्री पा—ण्वुल् इत॰। (तेलापोका) (आर-सुला) कीटभेदे अमरः।

**तैलपायिन्** पु॰ तैलं पिबति पा—णिनि। तैलपायिकाख्ये पक्षयुक्ते कीटभेदे। "तैलहृत् तैलपायी स्यात्" याज्ञ॰।

**तैलपिपीलिका** स्त्री तैलाक्तेव पिपीलिका। पिपिलीकाभेदे

**तैलपीत** त्रि॰ पीतं तैलं येन आहि॰परनि॰। पीततैलके।

**तैलफल** पु॰ तैलं फले यस्य। इङ्गुदीवृक्षे राजनि॰।

**तैलभाविनी** स्त्री तैलं भावयति वासयति भू—णिनि ङीप्। तैलवासके जातीपुष्पवृक्षे राजनि॰।

**तैलमाली** स्त्री तैलेन मालः सम्बन्धो यस्याः गौरा॰ ङीष्। वर्त्तिकायां दीपदशायां शब्दमाला।

**तैलम्पाता** स्त्री तिलस्य पातोऽत्र ज नि॰मुम् च। १स्वधा-याम्, २तदुपलक्षिते श्राद्धे च अमरः।

**तैलयन्त्र** पु॰ तैलमर्द्दनार्थं यन्त्रम्। तिलादिनिष्पीड़-नार्थे यन्त्रभेदे (कलुरघानि) "अमोमांसानि शौचानि तैलयन्त्रेक्षुयन्त्रयोः" स्मृतिः "रविरथचक्रं च तैलयन्त्र-चक्रवत् भ्रमत्" भागवते ५।२१।१८ श्लोकः।

**तैलवक** पु॰ तेलुन्दपस्य विषयो देशः राजन्या॰ वुञ्। तेलु-न्दपविषये देशे। [रनिच॰।

**तैलवल्ली** स्त्री तैलाक्तेव वल्ली। लघुशतावर्य्यां पारस्क-

**तैलसाधन** न॰ तैलं साधयति सुरभीकरोति सिध—णिच् साधि—ल्यु। कक्कोले गन्धद्रव्ये शब्दच॰। [भेदे हेमच॰।

**तैलस्फटिक** पु॰ तैलाक्तः स्फटिक इव। रत्नभेदे गो-

**तैलस्यन्दा** स्त्री तैलमिव स्यन्दति स्यन्द—अच्। १श्वेत-गोकर्ण्यां २काकोल्यां पारस्करनिघण्टुः।

**तैलागुरु** पु॰ तैलाक्तमिवागुरु। दाहागुरौ राजनि॰।

**तैलाटी** स्त्री अटति अट तैलेनाटं विषमस्याः गौरा॰ ङीष्। वरटायां तैलस्पर्शे तद्विषनाशात् तस्याः तथात्वम्।

**तैलाम्बुका** स्त्री तैलमम्बु इव पेयमस्याः। तैलपायि-काख्ये कीटे जटा॰।

**तैलिक** त्रि॰ तैलं पण्यं यस्य तैलं शिल्पमस्य वा ठक्। २तैलार्थं तिलनिष्पीड़ने (कलु) "खलमलिननीच-तैलिकविहीनसत्त्वोपहतपुंस्त्वा" इ॰स॰१६अ॰। २तैल-विक्रेतरि च "समुद्रगामी वन्दी च तैलिकः कूट-कारकः" मनुः तिलविक्रेतुरपाङ्क्तेयमुक्तम्।

**तैलिन्** त्रि॰ तैलं निष्पाद्यत्वेनास्त्यस्य इनि। १तैलकारे हेमच॰।२तैलयुक्ते त्रि॰। स्त्रियां ङीप् ङीवन्तः। ३तैल-कीटे राजनि॰ ४दशायां वर्त्तौ शब्दमा॰। [हेम॰।

**तैलिशाला** स्त्री इत॰। तैलनिष्पीड़नार्थे गृहे (घानिघर)

**तैलीन** तिलानां भवनं क्षेत्रं खञ्। तिलभवनयोग्ये क्षेत्रे अमरः। [इत्यन्यत्विनि स्त्रियां ङीप्।

**तैव्रदारव** त्रि॰ तीव्रदारुणइदम् रजता॰ अञ्। तीव्रदा-

**तैष** पु॰ तिष्यनक्षत्रयुक्ता पौर्णमासी अस्मि यत्रोपे ङीप्। तौषी साऽस्मिन् मासे अण्।१पौषे मासि धनुःस्थरव्यारब्धे शुक्लप्रतिपदादिदर्शान्ते चान्द्रे मासि अमरः तदीय पूर्णिमायामेव तद्योगसम्भवः। तिष्यशब्देन तत्समीप-नक्षत्रस्यापि ग्रहणात् कदाचित् तत्सम्बन्धाभावेऽपि न क्षतिः।२तदीयपौर्णमास्यां स्त्री "सास्मिन् पौर्णमासी" पा॰ नक्षत्रयुक्तकालस्य पूर्णिमायामेव तद्योगे साधुत्वेन पौर्णमासीपरत्वमेवेति बोध्यम्। "तैष्या नधीतपूर्वा-णाम्" आश्व॰ श्रौ॰ ८।१४।२२।

**तोक** न॰ सौ॰ तु—क तस्य नेत्त्वम्। १अपत्ये पुत्रे, दु-हितरि च अमरः। "निन्द्ये तोके दीदिवांसम्" २।२।११ "पश्चे तोकाय तनयाय जीवसे" ऋ॰ १०।३५।१२ "तोकेन

जीवहरणं यदुलूकिकायास्तैमासिकस्य च पदा शकटोऽपवृत्तः” भाग० १।७।२८ ।

**तोक्म** पु० तक स पृषो० अत ओत्त्वम् । हरिद्वर्णे अपक्वयवे अमरः । २हरिद्वर्णे हेमच०। ३कर्णमले न० हेम० । ४मेघे पु० अजयपालः । ५नवप्ररूढे यवे यवाङ्कुरे न० । “प्रायणीयस्य तोक्मानि” यजु० १६।१३। “तोक्मानि नवप्ररूढयवाः” वेददी० । “पत्रपुष्पफलच्छायामूलवल्कलदारुभिः । गन्धनिर्यासभस्मास्थितोक्मैः कामान् वितन्वते भाग०१०।२२।२५“तोक्माः पल्लवाद्यङ्कुराः” श्रीधरः तेन ६तदर्थेऽपि च ।

**तोक्मन्** न० तक–मनिन् पृषो० अत ओत्त्वम् । नवविरूढयवे २अपत्ये न० निघण्टुः । “भेषजं तोक्मभिः” यजु० २१।३० । “तोक्मभिर्लाजैर्महःस्वन्तः” यजु० २१।४२।

**तोटक** न० द्वादशाक्षरपादके छन्दोभेदे । “इह तोटकमम्बुधिसैः प्रथितम्” वृ०र० । [क्वदित् । णिच् अतुतोडत् त ।

**तोड** अनादरे भ्वा० पर० सक० सेट् । तोडति अतोडीत् ।

**तोड़ल** न० तन्त्रभेदे ।

**तोतस्** अव्य० तु–बा० तसि । १कवले २त्वयीत्यर्थे च । “मा वयं रायस्पोषेण वियौष्म तोतो रायः”यजु०४।२२। तोतः शब्दः कलत्रवाची अव्ययम् । तोतः कलत्रे रायो धनानि पशवो वा पदरूपेण तिष्ठन्तु । यद्वाऽव्ययानामनेकार्थत्वात्तोतः शब्दो युष्मत्पर्य्यायः । तोतः त्वयि रायः सन्तु” वेददी० ।

**तोड़न** न० तुड–भावे ल्युट् । १भेदने २दारणे ३हिंसने च ।

**तोड़ी(री)** स्त्री तुड़–अच् गौरा० ङीष् वा डस्य रः । स्वनामख्याते तैलसाधने धान्यभेदे । [ अमरः ।

**तोत्त्र** न०तुद्यतेऽनेन तुद–करणे ष्ट्रन् । गवादिताड़ने दण्डे

**तोद** पु० तुद–भावे घञ् । व्यथायां रत्नमाला । “हीनदग्धे तोदकण्डूजाड्यानि व्याधिवृद्धिश्च” सुश्रु० । “दंशे तोदकण्डूप्रादुर्भावैर्जानीयात्”सुश्रु०। कर्त्तरि अच् । २व्यथके त्रि० ।“तोदो वातस्य हर्य्योरीशानः” ऋ० ४।१६।११ । “तोदस्तोदकः” भा० ।

**तोदन** न०तुद्यतेऽनेन करणे ल्युट् ।१तुण्डे तुस्ते अमरः। भावे ल्युट् । २व्यथायाम् मेदि०। कर्त्तरि ल्यु ।३व्यथके त्रि०।“कषायं मधुरं रूक्षं तोदनं कफवातजित्”सुश्रु०।४चोरिद्रुमभेदे पु०। “चोरष्टचफलजाम्बवराजादनतोदनतिन्दुकबकुलधन्वनाश्मन्तकाश्वकर्णफलगुपरूषकगाङ्गेरुकीपुष्करवर्त्तिबिल्वबिम्बीप्रभृतीनि। फलान्येतानि शीतानि कफपित्तहराणि च । संग्राहकाणि रूक्षाणि कषायमधुराणि च” सुश्रु० ।

**तोदपर्णी** स्त्री तोदं तोदकं पर्णमस्याः गौरा० ङीष् । कुत्सिते धान्यभेदे ।

“कोरदूषकश्यामाकनीवारशान्तनुतुवरकोद्दालकप्रियङ्गुमधूलिकानान्दीमुखकुरुविन्दगवेधुकवरूकतोदपर्णी मुकुन्दकवेणुयवप्रभृतयः कुधान्यविशेषाः” सुश्रु० ।

**तोमर** पुंन० तु–विच् तौर्गतौ म्रियतेऽनेन मृ–करणे अप् । १हस्तक्षेप्ये शस्त्राख्ये दण्डाकारेऽस्त्रभेदे (सांगे) अमरः । तोमरलक्षणं हेमा०प०लक्षणसमुच्चये उक्तं यथा । शौनकधनुर्वेदे । “शुक्रो भगवानुवाच जमदग्निं प्रति वत्स ! निबोध यथाप्रश्नमुच्यमानम् तत्र दण्डान्वितं सर्वलौहं वेति तोमरं द्विविधं भवति। तत्र तोमरं सदण्डं लघ्वायतं भवेत् तोमरं सर्वायसं तत्कार्य्ये प्रयोजयेत्। तच्च निकृष्टमध्यमोत्तमं भूयस्त्रिविधं प्रमाणतो भवति तत्र चतुर्हस्तप्रमाणं निकृष्टं सार्द्धचतुर्हस्तं मध्यमं पञ्चहस्तप्रमाणं तूत्तमं भवति । तथा कलनायां चाद्यं द्वितीयं तृतीयं चेति त्रिधा द्व्यङ्गुलमध्ये द्व्यङ्गुलकलितमेकं स्यान्मध्यात्पूर्वं त्र्यङ्गुलकलितं द्वितीयं स्यात्। मध्यात्पूर्वं षड़ङ्गुलकलितस्थानकलनया तृतीयं स्यात् । सार्द्धमेकं निकृष्टं, त्रयोमध्यमं षड़ुत्तमं कलनायास्तथा तोमरास्त्रस्य परिणाहः परः षड़ङ्गुलो भवति सार्द्धपञ्चाङ्गुलो मध्यमः पञ्चाङ्गुलः कनिष्ठ इति। त्रयाणां देशानां त्रयः छन्दाः। छादनात्तथा आवन्त्यो मागधो दाक्षिणात्यश्चेति। तत्रावन्त्यतोमरं तक्षणसंस्थानं भवति मागधं तोमरं योनिसंस्थानं भवति दाक्षिणात्यं तोमरं वृत्तं भवति। तेषां लक्षाणि तद्देशाच्छन्दतः इति इत्यादि । २नवाक्षरपादके छन्दोभेदे “प्रथमं सकं विनिधाय जगणद्वयञ्च निधाय । कुरु तोमरं सुखकारि फणिराजवक्त्रविहारि” तल्लक्षणम् । [ मराड्व्याहिषि ।

**तोमरग्रह** पु० तोमरं गृह्णाति ग्रह–अच् न अण् । तो-

**तोमरधर** पु० तोमरमस्त्रं धरति धृ-अच्। वह्नौ शब्दार्थक०

**तोमरिका** स्त्री तोमर+संज्ञायां कन् । आढक्याम् शब्दर०

**तोय** न० सौ०तु–विच् तवे पूर्त्त्यै याति या क। १जले २पूर्वाषाढ़ानक्षत्रे च । “जहृत्स मेघैस्ततः एव तोयम्”माघः। “अत्तोयैः शुध्यते शोध्यं नदीवेगेन शुध्यति” मनुः । पूर्वाषाढ़ानक्षत्रस्य जलदैवतत्वात् तथात्वम् । ३लग्नावधिचतुर्थस्थाने च ज्यो० त० । तत्र जलस्य चिन्तनीयत्वात् तथात्वम् ।

**तोयकर्म्मन्** न० तोयेन कर्म्म। तर्पणे "तोयकर्मणि चारब्धे राज्ञामुदकदानिके" भा०आ०१अ०।

**तोयकाम** पु० तोयं कामयते कम-अण्। १जलवेतसे जटाधरः। २जलाभिलाषुके त्रि०।

**तोयकुम्भ** पु० तोयस्य कुम्भ इव। शैवाले पारस्करनिघण्टुः।

**तोयकृच्छ्र** न० जलमात्रपानरूपे मासषाध्ये व्रतभेदे। "यदा तु विल्वानि फलानि प्रत्येकं कथितानि मासम्पीयन्ते तदा फलकृच्छ्रादिव्यपदेशं लभते। यथाह मार्कण्डेयः "फलैर्मासेन कथितः फलकृच्छ्रो मनीषिभिः। श्रीकृच्छ्रः श्रीफलैः प्रोक्तः पद्माक्षैरपरस्तथा। मासेनामलकैरेवं श्रीकृच्छ्रमपरं स्मृतम्। पत्रैर्मतः पत्रकृच्छ्रः पुष्पैस्तत्कृच्छ्र उच्यते। मूलकृच्छ्रः स्मृतो मूलैस्तोयकृच्छ्रो जलेन तु" इति। "इति पर्णकृच्छ्रमेकादशविधम्" मिता०।

**तोयडिम्भ** पु० तोयस्य डिम्भ इव। १मेघोपले करकायां हारा०।

**तोयद** पु० तोयं ददाति दा+क। १मेघे, २मुस्तके च। ३घृते न० मेदि०। ४विधिना जलदातरि त्रि०। "तोयदस्तृप्तिमाप्नोति" पुरा०। तद्दानमाहात्म्यं भा० शा० दानधर्म्मे यथा

"अन्ने दत्ते नरेणेह प्राणा दत्ता भवन्त्युत। प्राणदानाद्धि परमं न दानमिह विद्यते। अन्नं वापि प्रभवति पानीयात् कुरुसत्तम!। नीरजातेन हि विना न किञ्चित् संप्रवर्त्तते। अन्नौषध्यो महाराज! वीरुधश्च जलोद्भवाः। यतः प्राणभृतां प्राणाः सम्भवन्ति विशाम्पते!। तस्मात् पानीयदानाद्धि न परं विद्यते क्वचित्। तच्च दद्यान्नरो नित्यं यदीच्छेद् भूतिमात्मनः। धन्यं यशस्यमायुष्यं जलदानमिहोच्यते। शत्रूंश्चाप्यधि कौन्तेय! सदा तिष्ठति तोयदः। सर्वकामानवाप्नोति कीर्त्तिञ्चैवेह शाश्वतीम्। प्रेत्य चानन्त्यमश्नाति पापेभ्यश्च प्रमुच्यते। तोयदो मनुजव्याघ्र! स्वर्गं गत्वा महाद्युते!। अक्षयान् समवाप्नोति लोकानित्यब्रवीन् मनुरिति"।

**तोयधर** पु० तोयं धरति धृ-अच्। १मेघे मेदि० २मुस्तके च "नीला इवातपात्यये तोयं तोयधरा घनाः" रामा० बा० ६२ अ०।

**तोयधार** पु० तोयानां धारा यत्र। १मेघे २मुस्तके च। धारि-भावे अच्। तोयस्य धारः वर्षणम्। ३जलवर्षणे पु०। "घनवत्तोयधारेण ववर्ष कनकाम्बुभिः" हरिवं० ११२अ०। ६त०। ४जलधन्ततौ स्त्री। "शरान् व्यसृजतां शीघ्रं तोयधारा घना इव" भा०वि० ३२अ०। "गिरिः प्रस्रवण इव तोयधारा" रामा० आ० ३५ स०।

**तोयधि** पु० तोयानि धीयन्तेऽत्र धा-कि उप०स०। १समुद्रे जलधिप्रभृतयोऽप्यत्र। २चतुःसंख्यायाञ्च। "समन्तान्मेरुमध्यात् तु तुल्योभागेषु तोयधेः" सू० सि०।

**तोयधिप्रिय** न० तोयधिं प्रीणाति प्री-क। १लवङ्गे शब्दच०।

**तोयनिधि** पु० तोयं निधीयतेऽस्मिन् नि+धा-कि उप०स०। १समुद्रे २चतुःसंख्यायाञ्च। "पूर्वापरौ तोयनिधी वगाह्य" कुमा०।

**तोयनिवी** स्त्री तोयं समुद्रोदकं नीवीव यस्याः आर्षे न कप्। १पृथिव्यां "तोयनीव्याः पतिं भूमेरभ्यषिञ्चद्गजाह्वये" भाग० १।१५।३८। लोके तु कप् तोयनीविका तत्रार्थे। [लाङ्गल्याम् अमरः।

**तोयपिप्पली** स्त्री तोये पिप्पलीव। (काँचड़ा) शाकभेदे

**तोयपुष्पी** स्त्री तोयेन बहुजलदानेन पुष्पाण्यस्याः। १पाटलावृक्षे शब्दमाला।

**तोयप्रसादन** पु० तोयं प्रसादयति फलयोगेन प्र+सद-णिच्-ल्यु। १कतके (निर्मलि)। फलपरत्वे न० रत्नमाला "तोयप्रसादकाम्बुप्रसादकादयोऽप्यत्र "फलं कतकवृक्षस्य यद्यम्बुप्रसादकम्" मनुः।

**तोयफला** स्त्री तोयप्रधानं फलं यस्याः। १इर्वारौ कर्कटीभेदे राजनि०। [२मुस्तके च।

**तोयमुच्** पु० तोयं मुञ्चति मुच-क्विप् ६त०। १जलमुचि मेघे

**तोययन्त्र** न० सू० सि० उक्ते कालज्ञानार्थे घटीयन्त्रभेदे घटीयन्त्रशब्दे २७८१ पृ० दृश्यम्। (कोआरा) इति ख्याते २जलयन्त्रभेदे च।

**तोयराज्** पु० तोयेषु राजते राज-क्विप्। १समुद्रे "यदीच्छेद् सागरः किञ्चिदुत्स्रष्टुमिह तोयराट्" हरिवं० २२६ अ०। २वरुणे च

**तोयराशि** पु० तोयानां राशिरिव। १समुद्रे। ६त०। २जलसमूहे च "तोयराशिसम्भवापि तृष्णां संवर्द्धयति" काद०। [रत्नमा०। स्वार्थे क। तोयवल्लिकाप्यत्र।

**तोयवल्ली** स्त्री तोयसन्निहितस्थाने वल्ली। १कारवेल्ले (उच्छे)

**तोयशुक्तिका** स्त्री तोयजाता शुक्तिका शा०त०। जलशुक्तिकायां राजनि०।

**तोयशूक** पु० तोयस्य श्मूक इव। शैवाले पार० नि०।

**तोयसूचक** पुंस्त्री० तोयं तोयवर्षं सूचयति रवेण सूच-ण्वुल्। १भेके शब्दार्थक०। स्त्रियां जातित्वात् ङीष्। २जलवर्षणसूचके योगभेदे त्रि०। जलशब्दे १०६५ पृ० दृश्यम्।

**तोयविम्ब** न० तोयोत्थितं विम्बम् अर्द्धडिम्बाकारं वस्तु । जलविम्बे जलोपरिभासमाने अर्द्धगोलाकारे पदार्थे । अयं शब्दः तोयकर्णोशब्दात् परं पाठ्यः ।

**तोयात्मन्** पु० तोयमात्मा स्वरूपं यस्य तत्प्रकृतित्वात् । १परमेश्वरे । "यस्य केशेषु जीमूताः । नद्यः सर्वाङ्गसन्धिषु कुक्षौ समुद्राश्चत्वारस्तस्मै तोयात्मने नमः" विष्णुस्तुतिः ।

**तोयाधार** पु० ६त० । १जलाशये । जलाशयोत्सर्गशब्दे २०७५ पृ० तद्भेदादि दृश्यम् । "तोयाधारपथाश्च वल्कलशिखा-निष्यन्दरेखाङ्किताः" शकु० ।

**तोयाधिवासिनी** स्त्री तोयं तोयार्द्रं देशमधिवसति अधि+वस-णिनि ङीप् । पाटलावृक्षे रत्नमाला ।

**तोयेश** पु० ६त० । १वरुणे तदधिदेवताके २शतभिषानक्षत्रे च । तोयं जलमधिदेवोऽस्य । ३पूर्वाषाढ़ानक्षत्रे न० ।

**तोरण** पुंन० । तुर-युच आधारे ल्युट् तोलयत्यनेन तुल-उन्माने करणे-ल्युट् लस्य रो वा । बहिः स्थिते १द्वारे । "अयोध्यकैस्तोरणपङ्क्तिभङ्गेति" "गत्वो न्वपाश्वारुध तोरणाद्बहिः" माघः । "भासोज्ज्वलत्काञ्चन-तोरणानाम्" कुमा० । तच्च द्वाराग्रे निखातस्तम्भो-परिनिबद्धो धनुराकारः ( फटक ) इति ख्यातः पदार्थः । यागादौ मण्डपादुवहिर्द्वाररूपस्य तोरणस्य काष्ठविशेषप्रशाखादिकं मण्डपशब्दे दृश्यं मत्कृततुलादा-नादिपद्धतौ विस्तरो दृश्यः । २कन्धरायां न० हारा० ।

**तोरश्रवस्** पु० अङ्गिरोमुनौ ।

**तोल** पुंन० । चु० तुल-कर्मणि अच् । अशीतिरत्तिका-माने १कर्षे । "एकतोलं द्वितोलं वा त्रितोलं वेदतोल-कम् । इतोऽधिकं नरः कृत्वा प्रायश्चित्तीयते ध्रुवम्" आगमः । स्वार्थे क । तत्रार्थे "पलं तु लौकिकैर्मानैः साष्टरत्तिद्विमाषकम् । तोलकत्रितयं ज्ञेयम्" तिथित० ।

**तोल्य** त्रि० तुल+उन्माने कर्मणि-यत् । १तोलनीये । भावे यत् । २तोलने न० । "जीवानां वयसां तौल्ये तोल्ये वर्णस्य हेमनि" लीला० ।

**तोश** पु० तुश--वधे भावे घञ् । १हिंसायाम् । कर्त्तरि अच् । २हिंसके "त्वे राय इन्द्र ! तोशतमाः" ऋ०१।१६९।५। "तोशतिर्वधकर्मा नितोशयति निबर्हयतीति तत्रामसु पाठात् तोशतमाः नाशयितृतमाः" भा० । "तोशा वृत्रहणा हुवे" ऋ० ३।१२।४ । "तोशा बाधकौ" भा० । [भा०उ०३९अ० । तोषस्थाने आच् ।

**तोष** पु० तुष-भावे घञ् । सन्तोषे । "तोषपरो हि लाभः"

**तोषण** न० तुष-भावे ल्युट् । १सन्तोषे । तुष-णिच् भावे ल्युट् । २सन्तोषोत्पादने । "एतावदेव पुरुषैः कार्यं हृद-यतोषणम्" भा०स०१६अ० । कर्त्तरि ल्यु । ३सन्तोषजनके त्रि० "प्रसूत हृदयतोषणान्" भा० उ० ८३ अ० । करणे ल्युट् । ४तोषसाधने स्त्रियां ङीप् तोषणी ।

**तोषल** न० तोषं लूनाति लू-बा० ड । अस्त्रभेदे १मुषलेऽस्त्रे "कृष्णस्तोषलमुद्यम्य गिरिकूटोपमं बली" हरिवं०८७अ० ।

**तौक्षिक** पु०धनूराशौ दीपिका कौर्प्यशब्दे २२०८पृ०दृश्यम् ।

**तौतातिक** न० तुतातभट्टेन निर्वृत्तम् ठञ् । तुतात-भट्टकृतशास्त्रे "नैवाचापि गुरोर्मतं न विदितं तौतातिकं दर्शनम्" प्रबोधच० ।

**तौतिक** न० १मुक्तायां २शुक्तौ च राजनि० ।

**तौदी** स्त्री विषनाशके ओषधिभेदे घृतकुमार्याम् । "तौदी नामासि कन्या घृताची वा असि" अथ० १०।४।२४।

**तौम्बरविन्** पु० ब०व० । तुम्बुरुणा कलाप्यन्तेवासिना प्रोक्त-मधीयते इनि । कलाप्यन्तेवासिना तुम्बुरुणा प्रोक्त-शाखाध्येतृषु ।

**तौर** न० यागभेदे । "संवत्सरमचरहस्तौरेण यजेत" लाट्या० श्रौ० १०।२०।१ । "दार्षद्वततौरयोर्व्रतानि" १०।१८।१० । तत्रैव ।

**तौरयान** न० तूर्णं यानमस्य पृषो० । तूर्णगमनयुक्ते । "स तौरयान उपयाहि यज्ञम्" निरुक्ते ५।२५। श्रुतिः तौरयानः तूर्णयानः "तौरयान इत्यपि निगमो भवति"

**तौरश्रवस** न०तोरश्रवसाऽङ्गिरसा दृष्टं साम अण् । सामभेदे "तौरश्रवसे माध्यन्दिने पवमाने तदावपनश्रुतेः" कात्या० श्रौ० २५।१४।१४ । "तौरश्रवसे सामनी" कर्कः ।

**तौर्य्य** न० तूर्ये मुरजादौ वाद्ये भवम् अण् । मुरजादि-ध्वनौ ।

**तौर्य्यत्रिक** न० त्रयः परिमाणमस्य कन् तौर्य्योपलक्षितं त्रिकम् । समुदितेषु नृत्यगीतवाद्येषु अमरः । "वनेऽपि तौर्य्यत्रिकमारराध तम्" नैषधम् । "तौर्य्यत्रिकं वृथाद्या कामजो दशको गणः" मनुः ।

**तौल** न० तुलैव तुला+स्वार्थे अण् स्वार्थिका अपि प्रत्ययाः क्वचित्प्रकृतितो लिङ्गवचनान्यतिवर्त्तन्ते इत्युक्तेः देवता-दिवत् क्लीवता । मानभेदे १तुलायाम् २उन्मानदण्डे ३तुलाराशौ च ज्यो० ।

**तौलिक** पु०तूल्या जीवति तूली+ठक् । चित्रकरे शब्दमाला ।

**तौलिकिक** पु० तूलिकया जीवति ठक् । चित्रकरे हेमच० ।

**तौलिन्** पु॰ तुलैव तौलं तत् विद्यतेऽस्य इनि । तुलाराशौ "तौलिनि चित्रान्त्यार्द्धं स्वातिः पादत्रयं विशाखायाः" वृ॰सं॰१०२अ॰। अस्य क्लीवत्वमपि "शक्रे तौलि हुताशनेऽलिधनुषी यास्ये मृगो नैरृते" ज्यो॰राशिलग्ननिर्णयः ।

**तौल्य** त्रि॰ तुलया परिच्छिन्नम् ष्यञ् । तुलया परिच्छिन्ने त्रिका॰ । तुल्यमेव स्वार्थेऽण् । २तुल्ये न॰ ।

**तौल्वलि** पु॰तुल्वलस्यापत्यम् इञ् । तुल्वलर्षेरपत्ये "सर्वेभ्य एव निपृणीयादिति तौल्वलिः क्रियागुणत्वात्" आश्व॰ श्रौ॰ २।६।१७ "अभक्षणमितरेषां तौल्वलिः कृतार्थत्वात्" ५।६।२४ । ततः इञन्तत्वात् यूनि फक् तौल्वल्यादित्वात् युवप्रत्ययस्य न लुक् । तौल्वलायन-यूनि तदपत्ये ।

**तौल्वल्यादि** पु॰ "न तौल्वलिभ्यः" पा॰ सूत्रोक्ते युवप्रत्ययस्य लुकि पर्युदस्ते शब्दगणे स च गणः पा॰ग॰सू॰ उक्तो यथा

"तौल्वलि, धारणि. पारणि. रावणि, दैलीपि, दैवति, वार्कलि, नैवकि, दैवमति, दैवयज्ञि, चाफट्टकि, वैल्वकि, वैङ्कि, आनुराहति, पौष्करसादि, आनुरोहति, आनुति, प्रादोहनि, नैमिश्रि, प्राडाहति, वाश्वकि, वैशीति, आसिनासि, आहिंसि, आसुरि, नैमिषि, आसिबन्धकि, पौष्करेणुपालि, वैकर्णि, वैरकि, वैहति ।

**तौवरक** त्रि॰ तुवर्य्या इदम् अण् स्वार्थे क । तुवरीसम्बन्धिनि १स्नेहादौ "ऋते भल्लातकस्नेहात् स्नेहात्तौवरकात्तथा" सुश्रुतः । स्वार्थे अण् । ततः स्वार्थे क । २तुवरके । "आयुष्करं तौवरकं कषायं कटुपाकिकम् । उष्णं कृमिज्वरानाहमेहावर्त्तविनाशनम्" सुश्रुतः ।

**तौविलिका** स्त्री ओषधिभेदे । तौविलिके ! ऽवेलयावायमेनव ऐलयीत्" अथ॰ ६।१६।२ ।

**तौषायण** त्रि॰ तुषस्यादूरदेशादि पक्षा॰ चतुरर्थ्यां फक् । तुषस्यादूरदेशादौ ।

**तौषार** त्रि॰ तुषारस्येदमण् । तुषारसम्बन्धिनि जले राजनि॰ "तत्रान्तरिक्षं धारं कारं तौषारं हैममिति" आन्तरिक्षजलविभागे सुश्रुतः । भावप्र॰ तल्लक्षणादि उक्तं यथा "अपि नद्याः समुद्रान्ते वह्निरापश्च तद्भवाः । धूमावयवनिर्मुक्तास्तौषाराख्यास्तु ताः स्मृताः । अपथ्याः प्राणिनां प्रायो भूरुहाणान्तु ता हिताः । तुषाराम्बु हिमं रूक्षं स्याद्वातलमपित्तलम् । कफोरुस्तम्भकण्ठाग्निमेदोगलग्रहादिरोगनुत्" । नदीमारभ्य समुद्रपर्य्यन्तं वह्निरापस्ते तद्भवा वह्निभवाः धूमावयवनिर्मुक्ताः धूमांशरहिता आपः तौषाराख्या इत्यर्थः ।

**त्मन्** पु॰ आत्मन्+आलोपः । आत्मनि "त्मनसृजं न विश्वध क्षरध्यै" ऋ॰ १।६३।८ । त्मनमात्मानम् । "आङोऽन्यत्रापि छन्दसि दृश्यते" पा॰ इत्यात्मन आकारलोपः संज्ञापूर्वकस्य विधेरनित्यत्वादुपधादीर्घाभावः" भा॰ । "त्मने तोकाय तनयाय मृड" ऋ॰ १।११४।६ । "उप त्मन्या वनस्पते" ऋ॰ १।१८८।१०। 'त्मन्या आत्मना" भा॰ । तृतीयास्थाने या । "अश्वो हतेन त्मन्या" यजु॰ २६।१०। "वनस्पतिरवसृष्टो न पाशैः त्मन्या" २०।४५ ।

**त्यक्त** त्रि॰ त्यज-कर्मणि क्त । कृतत्यागे उत्सृष्टे समुज्झिते अमरः "अदृष्टार्थत्यक्तद्रव्यस्वीकारः प्रतिग्रहः" मूलपाणिः त्यजधातौ उदा॰।२त्यक्तुमुद्यते च "मदर्थे त्यक्तजीविताः" गीता "इत्युक्तः करुणं वाक्यं वानरैस्त्यक्तजीवितैः, रामा॰ कि॰ ५४ अ॰ ।

**त्यज** हानौ दाने च भ्वा॰ सक॰ पर॰ अनिट् । त्यजति अत्याक्षीत् तत्याज । त्यक्तव्यं त्याज्यम् त्यागः त्यक्तं त्यक्ता त्यागी । "त्यजेदेकं कुलस्यार्थे ग्रामस्यार्थे कुलं त्यजेत् । ग्रामं जनपदस्यार्थे आत्मार्थे पृथिवीं त्यजेत्" चाणक्यः "योऽत्याक्षीत् संयुगं भयात्" भा॰ द्रो॰ ६५ अ॰ "तं तत्याजाहितं पुत्रम्" रामा॰ २।३६अ॰ । "नैव नीतिवर्णेन कदाचित् त्यज्यते" पञ्चत॰। (मूराः) "मदर्थे त्यक्तजीविताः" गीता "प्रतिरोद्धा गुरोश्चैव त्यक्ताग्निर्वार्द्धुषिस्तथा" मनुः "न माता न पिता न स्त्री न पुत्रस्त्यागमर्हति" मनुः "त्याज्यं दोषवदित्येके कर्म प्राहुर्मनीषिणः । यज्ञदानतपः कर्म न त्याज्यमिति चापरे" गीता "ज्ञातिसम्बन्धिभिस्त्वेते त्यक्तव्याः कृतलक्षणाः" मनुः "चतुष्पदाः स्वयूथेभ्यस्त्यक्तव्याः परभूमिषु" वृ॰स॰६॰अ॰ । वेदे तु नि॰। णलि तित्याज "यस्तित्याज सचि विदं सखायम्" ऋ॰१०।७१।६। त्यागश्च स्वत्वध्वंसानुकूलव्यापारः न ममेदमित्याकारः। स च मूर्त्तद्रव्याणामेव भवति अमूर्त्तजीवनादेर्वियोजनरूपः । उपसर्गपूर्वकस्य तत्तदुपसर्गद्योत्यार्थयुक्तत्यागे इति भेदः ।

**त्यजस्** पु॰त्यज-भावेऽसुन् । १त्यागे "इन्द्रस्य न त्यजसा विहुणाति" ऋ॰१।१६६।१२। "त्यजसा त्यागेन" भा॰कर्त्तरि-असुन् ।२त्यागकर्त्तरि त्रि॰। "चिद्वारयातेमहि ! त्यजः" ऋ॰

१०।१४४।६। त्यजो दुःखस्य वर्जयितृ भा० "न तं तिग्मं चन त्यजो न" ऋ०८।४७।७। कारणे अशुन् । २क्रोधे च क्रोधात् प्रयुज्यमानमायुधं मुच्यते इति तस्य तथात्वम् ।

**त्यद्** त्रि० त्यज—"त्यजितनियजिभ्यो डित्" उ० अदि डित् ।१प्रसिद्धे । अस्य सर्वनामतया त्यदादिकार्य्यम्, स्यः त्यौ त्ये त्यस्मै त्यस्मात् त्येषां त्यस्मिन् । स्त्रियां स्या त्ये त्याः । क्लीबे त्यद् त्ये त्यानीति भेदः । २सर्वदा परोक्षाभिधानार्हे वस्तुनि ।

"द्वे वाव ब्रह्मणो रूपे मूर्त्तञ्चैवामूर्त्तञ्च मर्त्यञ्चामृतञ्च स्थितञ्च यच्च सच्च त्यच्च । तदेतन्मूर्तं यदन्यद्वायोश्चान्तरीक्षाच्चैतन्मर्त्यमेतत् स्थितमेतत् सत्तस्यैतस्य मूर्त्तस्यैतस्य मर्त्यस्यैतस्य स्थितस्यैतस्य सत एष रसो य एष तपति सतो ह्येष रसः । अथामूर्तं वायुश्चान्तरिक्षं चैतदमृतमेतद्यदेतत्त्यत्तस्यैतस्यामूर्त्तस्यैतस्यामृतस्यैतस्य यत एतस्य त्यस्यैष रसो य एष एतस्मिन्मण्डले पुरुषस्तस्य ह्येष रस इत्यधिदैवतम्" बृ० उ० । "ते एते द्वे वाव वावशब्दोऽवधारणार्थः । द्वे एवेत्यर्थः । ब्रह्मणो परमात्मनो रूपे रूप्यते याभ्यामरूपं परमब्रह्माविद्याध्यारोपणाभ्यां के ते द्वे । मूर्त्तञ्च एव मूर्तमेव च । तथा अमूर्त्तञ्च एवामूर्तमेव चेत्यर्थः । अन्तर्नीतस्वात्मविशेषणे मूर्त्तामूर्ते द्वे एवेत्यवधार्य्येते । कानि पुनस्तानि विशेषणानि मूर्त्तामूर्तयोरित्युच्यन्ते । मर्त्यं मरणधर्म्यं मृतञ्च तद्विपरीतम् । स्थितं परिच्छिन्नं गतिपूर्वकं यत् स्थास्नु । यच्च यातीति यद्व्याप्यपरिच्छिन्नं स्थितविपरीतम् । सच्च सदित्यन्येभ्यो विशेष्यमाणासाधारणधर्मविशेषवत् । त्यच्च तद्विपरीतं त्यदित्येव सर्वदा परोक्षाभिधानार्हम् । अथामूर्तमथाधुनाऽमूर्तमुच्यते । वायुश्चान्तरिक्षञ्च यत्परिशेषितं भूतद्वयं एतदमृतममूर्तत्वादस्थितमतोऽविरुध्यमानं केनचिदमृतममरणधर्मं तद्यत् स्थितविपरीतं व्याप्यपरिच्छिन्नं यस्माद्यदेतदन्येभ्योऽप्रविविच्यमानविशेषमतस्त्यत्त्यदिति परोक्षाभिधानार्हमेव पूर्ववत् । तस्यैतस्यामूर्तस्यैतस्यामृतस्यैतस्य यत एतस्य त्यस्य चतुष्टयविशेषणस्यामूर्तस्यैव रसः । कोऽसौ । य एष एतस्मिन्मण्डले पुरुषः करणात्मको हिरण्यगर्भः प्राण इत्यभिधीयते । यः स एषः अमूर्तस्य भूतद्वयस्य रसः पूर्ववत् सारिष्ठः, एतत्पुरुषसारञ्चामूर्तं भूतद्वयं हैरण्यगर्भलिङ्गारम्भाय हि भूतद्वयाभिव्यक्तिरव्याकृतात्तस्मात्तादर्थ्यात्तत् सारं भूतद्वयम् । त्यस्य ह्येष रसो यस्माद्यो मण्डलस्थः पुरुषो मण्डलवन्न दृश्यमानस्य भूतद्वयस्य च साधर्म्यम् । तस्मादुक्तं प्रसिद्धवद्धेतूपादानं त्यस्य ह्येष रस इति" भा० भाष्यम् "सूतो वा सूतपुत्रो वा यो वा को वा भवाम्यहम्" वेणी० । अव्ययीभावे शरदा० अच् समासान्तः । उपत्यदम् ।

**त्यदादि** पु० पा० गणसूत्रोक्ते शब्दसमूहे । स च गणः "त्यद् तद् यद् एतद् इदस् अदस् एक द्वि युष्मद् अस्मद् भवत् किम्" "त्यदादीनामः" पा० अत्र अत्वविधौ द्विपर्य्यन्तस्यैव ग्रहणमिति भाष्यकारेष्टिः ।

**त्याग** पु० त्यज—भावे घञ् । उत्सर्गे मूर्तद्रव्यस्य स्वत्वध्वंसानुकूलव्यापारे न ममेदमित्याकारे । "न माता न पिता न स्त्री न पुत्रस्त्यागमर्हति" "उन्मत्तं पतितं क्लीबमवीरं पापरोगिणम् । न त्यागोऽस्ति द्विषन्त्याश्च न च दायापवर्तनम्" मनुः अमूर्तद्रव्यस्य २वियोगमात्रे च । त्यागश्च सात्त्विकादिभेदात् त्रिविधः । यथाह गीता "नियतस्य तु सन्न्यासः कर्मणो नोपपद्यते । मोहात्तस्य परित्यागस्तामसः परिकीर्त्तितः । दुःखमित्येव यत् कर्म कायक्लेशभयात् त्यजेत् । स कृत्वा राजसं त्यागं नैव त्यागफलं लभेत् । कार्य्यमित्येव यत् कर्म नियतं क्रियतेऽर्जुन ! । सङ्गं त्यक्त्वा फलं चैव स त्यागः सात्त्विको मतः" । विशेषणाभावात् विशेष्याभावात् उभयाभावाच्च पुनरपि सात्त्विकस्त्यागः त्रिविधः तथा हि फलाभिसन्धिपूर्वककर्मत्यागः सत्यपि कर्मणि फलाभिसन्धित्यागादेकः । स च सात्त्विकत्वादाद्यः । सत्यपि फलाभिसन्धौ कर्मत्यागात् द्वितीयः । स च दुःखबुद्ध्या कृतो राजसः विपर्य्यासेन कृतस्तामसः इति भेदः । द्विविधोऽपि ज्ञेयो भवति । फलाभिसन्धेः कर्मणश्च त्यागात् तृतीयः । स च कर्मानधिकारिकर्त्तृको नैर्गुण्यरूपः । सोऽपि साधनफलभेदेन द्विविधः । तत्र सात्त्विकेन फलाभिसन्धित्यागपूर्वककर्मानुष्ठानरूपेण त्यागेन शुद्धान्तःकरणस्योत्पन्नविविदिषस्य आत्मज्ञानसाधनश्रवणाख्यं वेदान्तविचाराय फलाभिसन्धिरहितस्यान्तःकरणशुद्धौ सत्यां तत्साधनस्य परित्यागः स एकः साधनभूतो विविदिषासन्न्यास उच्यते । जन्मान्तरकृतसाधनाभ्यासपरिपाकादस्मिन् जन्मनि आदावेवोत्पन्नात्मबोधस्य कृतकृत्यस्य स्वत एव फलाभिसन्धेः कर्मणश्च परित्यागः फलभूतः स विद्वत्सन्न्यास इत्युच्यते । "त्यागप्रपञ्चरूपस्य चिदात्मत्वायलोकनात् । त्यागो

हि महतां पूज्यः सद्यो मोक्षमयो यतः। त्यागेन युक्ता दिवमुत्पतन्ति त्यागेन हीना नरकं व्रजन्ति। न त्यागिनां दुष्करमस्ति किञ्चित् त्यागो हि सर्वव्यसनानि हन्ति" शब्दार्थचि॰ धृतवाक्यम्।

**त्यागिन्** त्रि॰ त्यज–घिणुन्। १ दातरि, २शूरे, ३वर्ज्जनशीले, ४कर्मफलत्यागिनि च "न द्वेष्ट्यकुशलं कर्म कुशलेनानुषज्जते। त्यागी सत्त्वसमाविष्टो मेधावी छिन्नसंशयः। न हि देहभृता शक्यं त्यक्तुं कर्माण्यशेषतः। यस्तु कर्मफलत्यागी स त्यागीत्यभिधीयते" गीता "आत्मनस्त्यागिनां चैव निवर्त्ततोदकक्रिया" मनुः।

**त्यागिमन्** त्रि॰ त्यागेन निष्पन्नं त्याग+इमनन्। त्यागेन निर्वृत्ते।

**त्याज्य** त्रि॰ त्यज+ण्यत् कुत्वाभावः। १वर्ज्जनीये "तीरे प्रतिग्रहस्त्याज्यस्त्याज्यो धर्मस्य विक्रयः" प्रा॰ त॰। २दातुं योग्ये च। "त्याज्यो दृष्टः प्रियोऽप्यासीदङ्गुलीवोरगक्षता" रघुः। "सा त्ववाप्यान्यतो गर्भं त्याज्या भवति पापिनी। महापातकदुष्टा च पतिगर्भविनाशिनी" व्यासस॰।

**त्रक** गतौ भ्वा॰ आत्म॰सक॰सेट्। त्रकते अत्रकिष्ट। तत्रके।

**त्रख** गतौ भ्वा॰ पर॰ सक॰ सेट् धातुपाठः। त्रखति अत्रखीत् अत्राखीत्। तत्राख। [अत्रङ्खीत्। तत्रङ्ख।

**त्रख** गतौ भ्वा॰ पर॰ सक॰ सेट् इदित् धातुपाठः। त्रङ्खति

**त्रग** गतौ भ्वा॰ पर॰सक॰ सेट् इदित्। त्रङ्गति अत्रङ्गीत्। तत्रङ्ग। अयं दिवा॰ धातुपाठः। त्रङ्ग्यति।

**त्रङ्ग** पुंस्त्री त्रगि–अच्। पुरभेदे हरिश्चन्द्रपुरे सौभे उद्गङ्गे प्रतिमार्गके त्रिका॰।

**त्रद** चेष्टायां भ्वा॰ पर॰ अक॰ सेट इदित्। त्रन्दति अत्रन्दीत्। तत्रन्द।

**त्रप** लज्जायां भ्वा॰आ॰ अक॰ वेट्। त्रपते अत्रपिष्ट अत्रप्त त्रेपे। णिच् वा च॰। त्रपयति त्रापयति। षित् त्रपा। "कान्तया कान्तसंयोगे किमकारि नवोढया। अत्रापि च क्रिया प्रश्नोत्तरा शुभा न बुध्यते" विदग्धमुख॰। "अपेक्षाभिचायामपि किमपि चेतस्त्रपयति" शान्तिश॰। अप–अन्वतो लज्जायाम् "तस्माद्बलैरपत्रपे मे" भट्टिः। "लज्जा सापत्रपान्यतः" अमरः।

**त्रपा** स्त्री त्रप–भावे अङ्। १लज्जायाम् अमरः। कर्त्तरि अच्। २सलज्जे त्रि॰। ३कुलटायां स्त्री मेदि॰। ४कुले ५कीर्त्तौ च शब्दच॰।

**त्रपाक** पुंस्त्री॰ त्रप–आक। म्लेच्छजातिभेदे उणादि॰।

**त्रपारण्डा** स्त्री त्रपायां रण्डा। लज्जाहीनायां वेश्यायां जटा॰ शब्दक॰ वस्तुतः त्रपारण्डेति नामद्वयं मेदिनौ त्रपाशब्दस्य वेश्यार्थकत्वोक्तेः रण्डाशब्दस्य च तदर्थप्रसिद्धेस्तत्समानार्थकत्वौचित्यात्।

**त्रपिष्ठ** त्रि॰ अतिशयेन तृप्रः अतिशायने इष्ठन् प्रियादि॰ त्रपादेशः। तृप्रतरे। [स्त्रियां ङीप्।

**त्रपीयस्** त्रि॰ अतिशयेन तृप्रः ईयसुन् त्रपादेश ः। तृप्रतरे

**त्रपु** न॰ अग्निं दृष्ट्वा त्रपते लज्जते इव त्रप–उन्। १सीसके २रङ्गे च मेदि॰ तस्य विकारः अण् "त्रपुजतुनोः षुक् च" पा॰ षुक् च। त्रापुष तद्विकारे त्रि॰। "ताम्रायःकांस्यरैत्यानां त्रपुणः सीसकस्य च" मनुः। "सुवर्णस्य मलं रूप्यं रूप्यस्यापि मलं त्रपु। ज्ञेयं त्रपुमलं सीसं सीसस्यापि मलं मलम्" भा॰उ॰ २८ अ॰। [लताभेदे।

**त्रपुकर्कटी** स्त्री त्रपु इव शुभा कर्कटी। (ससा) इति ख्याते

**त्रपुटी** स्त्री त्रप–बा॰-उटक् गौरा॰ ङीष्। सूक्ष्मैलायाम्। रत्नमाला।

**त्रपुल** न॰ त्रप–बा॰ उल। रङ्गे हिरूपकोषः।

**त्रपुष(स)** न॰ त्रपुस्याः(षाः)फलम् अण् फले तस्य लुप्। त्रपुषी(सी)फले। "त्रपुसं(षं) लघु नीलञ्च नवं तृट्क्लमदाहजित्। स्वादु पित्तापहं शीतं रक्तपित्तहरं परम्। तत्पक्वमल्लमुष्णं स्यात् पित्तलं कफवातनुत्। तद्बृहन्मूत्रलं शीतं रूक्षं पित्ताश्मकृच्छ्रजित्" भावप्र॰।

**त्रपु(ष)स** न॰त्रप-बा॰उस(ष)। १रङ्गे हिरूपकोषः। गौरा॰ ङीष् २माहेन्द्रवारुण्यां कर्कटीभेदे (ससा) लताभेदे। सा च पीतपीष्पा कारुडालुः बहुफला तुन्दिलफला कण्टकफला सुधावासा च।

**त्रप्सा** स्त्री घनीभूतश्लेष्मादौ। "कृमिकीटपटङ्गैर्वा दूषिता यत्र मेदिनी। त्रप्सया कर्षणैः क्षिप्रा वान्तैर्वा दूषितां व्रजेत्। नखदन्ततनूजत्वक्तुषपांशुरजोमलैः। भस्मपङ्कत्रयैर्वापि प्रच्छन्ना मलिना भवेत्" "त्रप्सा घनीभूतश्लेष्मादि" शु॰त॰।

**त्रप्स्य** न॰ घनेतरदधनि अमरटीकायां विद्याविनोदः।

**त्रय** न॰स्त्री त्रयाणामवयवम् अयच्। त्रितये १त्रित्वसंख्यायाम् "वेदत्रयं निरदुहत् भूर्भुवः स्वरितीति च" मनुः। स्त्रीत्वपक्षे ङीप्; "व्याघोतिष्ट सभावेद्यामसौ नरशिखित्रयी" माघः त्रयोऽवयवा अस्य अयच्। २त्रित्वसंख्यान्विते त्रि॰ स्त्रियां ङीप्। "प्रत्यक्षमनुमानञ्च शास्त्रञ्च विविधागमम्। त्रयं सुविदितं कार्यं धर्म-

शुक्लभीण्सताः” मनुः ङीपन्तः “ऋग्यजुःसामरूपे २वेदत्रये त्रित्वसंख्यान्वितेषु ऋगादिवेदेषु अमरः“एतद्विदन्तोविद्वांसस्त्रयीनिष्कर्षमन्वहम्” “त्रैविद्येभ्यस्त्रयीं विद्याद्दण्डनीतिञ्च शाश्वतीम्” मनुः। “ब्रह्माऽथ पुरुषो रुद्रस्त्रयमेतत् त्रयीमयम्। सर्गादाहङ्मयो ब्रह्मा स्थितौ विष्णुर्यजुर्मयः। रुद्रः साममयोऽन्ताय तस्मात् तस्याशुचिर्ध्वनिः” मनुः।४पुरन्ध्र्यां ५सुमतौ स्त्री विश्वः ६सोमराजीवृक्षे स्त्री शब्दच०। ७भवान्याम् दुर्गायाम्। यथा “ऋग्यजुःसामभागेन साङ्गवेदगतापि या। त्रयीति पठ्यते लोके दृष्टा दृष्टार्थसाधिनीति” देवीपु०।

**त्रयःपञ्चाशत्** स्त्री त्र्यधिका पञ्चाशत् त्रिशब्दस्य त्रय आदेशः। (निपात्न)१त्र्यधिकपञ्चाशत्संख्यायां २तत्संख्यान्विते च बहुत्वेऽप्येकत्वम्। एवं त्रयोदशत्रयोविंशतित्रयस्त्रिंशत् त्रयश्चत्वारिंशत् प्रभृतयः त्र्यधिकदशादिसंख्यायां तत्संख्ये ये च। द्व्यांस्तु भेदेः अशीतिभिन्ने चत्वारिंशदादौ वा त्रय आदेशः। तेन पक्षे त्रिचत्वारिंशादित्यादि तत्रार्थे अशीतौ नेति त्र्यशीतिः।

**त्रययाय्य** पु० त्रयं जन्मत्रयं याति या--बा० आय्य। जन्मत्रयप्राप्ते “ऋतुर्न त्रययाय्यः”ऋ० ६।२।७। “त्रययाय्यो जन्मत्रयं प्राप्तः। जन्मत्रयं स्मर्यते। मातुरग्रेऽधिजननात् द्वितीयं मौञ्जिबन्धनात्। तृतीयं यज्ञदीक्षाया इति जन्मत्रयं स्मर्तीमति” तादृशः पुत्र इति”भा०।

**त्रयस्त्रिंश** त्रि० त्रयस्त्रिंशत्+पूरणे डट्। त्र्यधिकत्रिंशत्संख्यापूरणे स्त्रियां ङीप्।

**त्रयस्त्रिंशत्पति** पु० त्रयस्त्रिंशतो देवानां पतिः। १इन्द्रे हेमच०। २प्रजापतौ च तयोः त्र्यधिकत्रिंशतो देवानां पतित्वात् तथात्वम्। देवानां त्रयस्त्रिंशत्त्वं तु

“अष्टौ वसवः एकादश रुद्रा द्वादशादित्या इमे एव द्यावा पृथिवी त्रयस्त्रिंश्यौ,त्रयस्त्रिंशद्वै देवाः प्रजापतिश्चतुस्त्रिंशस्तदेनं प्रजापतिम्” शत० ब्रा० ४।५।६।२। “कतमे ते त्रयस्त्रिंशदित्यष्टौ वसव एकादश रुद्रा द्वादशादित्यास्त एकत्रिंशत् इन्द्रश्चैव प्रजापतिश्च त्रयस्त्रिंशाविति” शत० ब्रा० ११।६।३।५। तु अन्यथोक्ता अस्मिन् पक्षे निर्द्धारणसप्तम्यासमासात् इन्द्रप्रजापतिपरत्वम् तयोस्तेषां मध्ये श्रेष्ठत्वेन पतित्वात्तथात्वमिति बोध्यम्। “आदित्यांश्च वसूंश्चैव रुद्रांश्चैवाश्विनावपि” रामा० ३। २०। अन्यथा संख्योक्ता।

**त्रयस्त्रिंशस्तोम** पु० त्रयस्त्रिंशत् स्तोमा अस्य दृष्णो०। यज्ञभेदे। “त्रयस्त्रिंशस्तोमेन शोणः सात्रासाहः पाञ्चालो राजा। तदेतद्गाथयाऽभिगीतम् “सात्रासाहे यजमाने अश्वमेधेन तौर्वशाः। उदीरते त्रयस्त्रिंशाः षट् सहस्राणि वर्मिणाम्” शत० ब्रा० १३।५।४।१६।

**त्रयस्त्रिंशिन्** न० त्रयस्त्रिंशत् ऋचः सन्त्यस्मिन् इनि डित्। त्रयस्त्रिंशदृग्भिर्गीयमाने सामभेदे। “त्रयस्त्रिंशि नाम साम माध्यन्दिने पवमाने भवति” तैत्ति० १।२।२।४

**त्रयीतनु** पु० त्रयी वेदा एव तनुरस्य। १सूर्य्ये हला०। “स्वर्गद्वारं त्रय्या विद्यया भगवन्तं त्रयीमयं सूर्य्यमात्मानं यजन्ते” भाग०५।२०।७। तस्य त्रयीमयत्वोक्तात्तथात्वम्।

**त्रयीधर्म्म** पु० त्रय्या वेदत्रयेण विधीयमानो धर्मः शाक०। वैदिके धर्मे ज्योतिष्टोमादौ अमरः।

**त्रयीमय** पु०त्रय्यात्मकः मयट्। १सूर्य्ये त्रयीतनुशब्दे उदा० २त्रयीधर्म्मात्मके त्रि०। “एवं मुहूर्त्तेन चतुस्त्रिंशल्लक्षयोजनान्यष्टशताधिकानि सौरो रथस्त्रयीमयोऽसौ चतसृषु परिवर्त्तते पुरीषु” भाग० ५ २१।१७। “त्रयीमयं रूपमिदञ्च शौकरम्”इत्युक्ते वाराहे ३रूपे न०तद्रूपविधृतिस्तत्रैव “स्रुक्तुण्ड आसीत् स्रुव ईश! नासयोरिडोदरे चमसाः कर्णरन्ध्रे। प्राशित्रमास्ये ग्रसने ग्रहास्तु ते यच्चर्वणं ते भगवन्नग्निहोत्रम्। दीक्षानुजन्मोपसदः शिरोधरं त्वं प्रायणीयोदयनीयदंष्ट्रः जिह्वाप्रवर्ग्यस्तव शीर्षकं क्रतोः सत्यावसथ्यं चितयोऽसवो हि ते। सोमस्तु रेतः सवनान्यवस्थितिः संस्थाविभेदास्तव देव! धातवः। सत्राणि सर्वाणि शरीरसन्धयस्त्वं सर्वयज्ञक्रतुरिष्टिबन्धनः। नमो नमस्तेऽखिलमन्त्रदेवताद्रव्याय सर्वक्रतवे क्रियात्मने” भाग० ३।१३।४०। ४परमेश्वरे च पु०। “स एष आत्माऽऽत्मवतामधीश्वरस्त्रयीमयो धर्ममयस्तपोमयः” भाग०२।४।१९।

**त्रयीमुख** पु० त्रयी मुखेऽस्य। विप्रे हेमच०।

**त्रयोदशन्** त्रि०त्रयश्च दश च, त्र्यधिका वा दश शाक० त्रय आदेशः। १त्र्यधिकदशसङ्ख्यायां २तत्संख्यान्विते च। “क्वचित् द्वादश मासाः संवत्सराः क्वचित् त्रयोदश मासाः” श्रुतिः म०त०। ततः पूरणे डट्। त्रयोदश तत्पूरणे त्रि० “ज्यैष्ठे ज्येष्ठस्य कुर्वीत त्रयोदशदिनात् परम्” ज्यो० स्त्रियां ङीप्। सा च चन्द्रस्य त्रयोदशकलाक्रियात्मके तिथिभेदे सा च स्मरतिथिः तत्रैव तस्योत्पत्तेः। “त्रयोदशी पञ्चदशी च माघे” मन्वादिकथने“वरुणेन समायुक्ता मधौ कृष्णा त्रयोदशी” वारुणीकथने च ति०त०।

**त्र्यारुण** पु० माम्नातृवंश्ये त्रिधर्मणः सुते नृपभेदे “राज-

"त्रिधर्मस्यस्यासीत् विद्वांस्त्र्यारुणः सुतः" हरिवं० १२ अ०।

त्रस गतौ ग्रहे निषेधे च चुरा० उभ० सक० सेट्। त्रसयति ते अतित्रसत् त।

त्रस भावे वा चुरा० उभ० पक्षे भ्वा० पर० अक० सेट् इदित्। त्रंसयति ते त्रंसति अतत्रंसत् त अत्रंसीत्।

त्रसी भये वा दिवा० पक्षे भ्वा०पर०अक०सेट्। त्रसति अत्रासीत् अत्रसीत् तत्रास पक्षा० त्रेसतुः तत्रसतुः। ईदित् क्तः। त्रस्त दिवादित्वे वार्थपाक्षिके श्यन्। त्रस्यति। "त्रस्यन्ती चलशफरीविघट्टितोरुः" माघः "त्रसन्तु रात्रिंचरमर्त्त्यम्लवर्य्यप्रहारोपचलेन निष्क्रियाम्" "शक्करस्थितिरपि यत्र गौरवात्" माघः। "त्रस्यन् वै जानकाकेभ्यः" भट्टिः। "ततो रामेति चक्रन्दुस्त्रस्ताः परिदिदेविरे" भट्टिः "कपीरत्राचिपुन्नीटान् चत्रसुः सिंहध्वनेरिव" भट्टिः। "रावणस्य न चात्रासीत् प्रनष्टुमवतिष्ठ च" भट्टिः।

उद्+उत्कटभये। "बाला उत्त्रासयन्ति च" हरिवं० २१७७।

त्रस त्रि० त्रस-भये आधारे पचाद्यर्थे क।१वने त्रिका०। त्रस-गतौ अच्।२जङ्गमे त्रि० अमरः। त्रसरेणुः।

त्रसद्दस्यु पु० मान्धातृपौत्रभेदे। "तस्मात्त्वत्यदयामास मान्धाता द्वौ सुतौ नृप!। पुरुकुत्सस्य धर्मज्ञं मुचुकुन्दश्च धार्मिकम्। पुरुकुत्ससुतस्त्वासीत् त्रसद्दस्युर्महीपतिः" हरिवं० १२ अ०। [२त्रासयुक्ते त्रि०।

त्रसन न० त्रस-भावे ल्युट्। १भये २उद्वेगे कर्त्तरि ल्यु।

त्रसर पु० त्रस-अरन्। तन्तुवायोपकरणभेदे (तासनी) अमरः

त्रसरेणु पु० त्रसः चलो रेणुः कर्म०। "जालान्तरगते भानौ सूक्ष्मं यद्दृश्यते रजः। प्रथमं तत्प्रमाणानां त्रसरेणुं प्रचक्षते" मनूक्ते गवाक्षान्तर्गतसूर्य्यकिरणेषु १दोधूयमाने रजसि २परमाणुषट्कात्मके द्व्यणुकत्रयात्मके रजसि "परमाणुद्वयेनाणुस्त्रसरेणुस्तु ते त्रयः" ब्रह्मवै०। "जालान्तरगते सूर्य्यकरे ध्वंसी विलोक्यते। त्रसरेणुस्तु विज्ञेयः त्रिंशता परमाणुभिः" इति वैद्यकपरिभाषया ३त्रिंशत्परमाणुरूपे रजसि च। ४सूर्य्यपत्नीभेदे स्त्री त्रिका०।

त्रसुर त्रि० त्रस-उरच्। भीरौ संक्षिप्तसारः।

त्रस्त त्रि० त्रस-क्त। १भीते २चकिते। ३शीघ्रे न०। "त्रस्तौ समासन्नकरेणुसूत्कात्" "त्रस्तः समस्तजनहासकरः करेणुः" माघः "कुगोपालाननत्रस्तः" रघुः।

त्रस्नु त्रि० त्रस-क्नु। भीरौ भयशीले अमरः। "सीतां सौमित्रिणा त्रस्नां स भीर्वी मनुमेकिकाम्" भट्टिः "बल त्रस्नुभिर्युक्तमुरं तुरङ्गैः" रघुवंशकाव्यम्।

त्रा पालने अदा० आ० सक० अनिट् क्रमदीश्वरः। त्राति अत्रात। "कान्तारे ब्राह्मणान् गाश्च यः परित्राति कौशिक!" भा० अनु० ७३ अ०। आर्षत्वात् पदव्यत्ययः।

त्राण न० त्रै-पालने भावे ल्युट् भावे क्त तस्य नो वा। १रक्षणे। कर्मणि क्त वा तस्य नः। २रक्षिते त्रि० ३त्रायमाणालतायां न० मेदि० तत्रार्थे स्त्री राजनि०। "न कुर्यादात्मनस्त्राणं गोरकृत्वा तु शक्तितः" मनुः। [भावे क्त। २रक्षणे न०।

त्रात त्रि० त्रै-कर्मणि क्त वा तस्य नत्वाभावः। १रक्षिते

त्रापुष त्रि० त्रपुणा निर्वृत्तम् अण् षुक् च। रङ्गमये पात्रादौ।

त्रामन् त्रि० त्रै-पालने तनिन्।१रक्षके "तव त्रामभिरिन्द्र! तूर्वयामम्" ऋ० १।५३।१०।

त्रायन्ती स्त्री त्रै-सम्प० भावे क्विप् त्राः तामयति गच्छति भ्वा० प० गतौ शतृ-ङीप्। त्रायमाणालतायाम् अमरः। "त्रायन्ती तुवरा तिक्ता सरा पित्तकफापहा। ज्वरहृद्रोगगुल्मामभ्रमशूलविषापहृत्" भावप्र०। "कल्की हरती च त्रायन्ती निम्बगोधुरीः" सुश्रु०। स्वार्थे क। त्रायन्तिका तत्रार्थे "प्रियङ्ग्वनन्तायूथिकापद्मात्रायन्तिकालोहितिकाम्बष्ठादाडिमवल्कशालपर्णीपद्मकिञ्जल्ककेशरधातकीबकुलशाल्मलीश्रीवेष्टकमोचरसैर्लिरीटानर्क्कमीर्वे हानावकान् कुर्वीत" सुश्रु०।

त्रायमाण त्रि० त्रायते त्रै-कर्मणि शानच्। १रक्ष्यमाणायां (बाबा)ख्यातायां २लतायाम् अमरः। स्वार्थे क। तत्रार्थे स्त्री राजनि०। [दर्पीभने।

त्रायोदश त्रि० त्रयोदश्यां भवं सन्धिवेला० अण्। त्रयो-

त्रास पु० त्रस-भावे घञ्। १भये "त्रासाकुलः परिपतन् परितो निकेतान्" माघ०।२मणिदोषभेदे च मेदि०।

त्रासन न० त्रस-णिच् भावे ल्युट्। १भयोत्पादने कर्त्तरि ल्यु। २भयोत्पादके त्रि०।

त्रि त्रि० ब० व० तृ-ड्रि। त्रित्वसंख्याविशिष्टे। "इति वेदास्त्रयस्त्रयी" अमरः "त्र्यायैस्त्रिभिरुदीरयम्" कुमा० "त्रिभ्य एव तु वेदेभ्यः पादम्पादमदूदुहत्" मनुः। स्त्रियां गौणत्वे मुख्ये च विभक्तौ परतः तिस्रादेशः। तिस्रः कर्तितिस्रा कैश्चित्तु प्रियतिसृभ्य उदाहृतम् तच्चिन्त्यम् "तिसृभिस्त्वमवस्थाभिर्महिमानमुदीरयन्" कुमा०। त्रयाणां भेदे तु क्वचित् त्रीणाभिति रूपं "सखि! त्रीणामयोऽस्तु दुःखं मित्रस्यार्यमणः" ऋ०१०।१८५।१।

त्रिंश त्रि० त्रिंशत्+पूरणे डट्। त्रिंशत्पूरणे, त्रिंशत्तमे

"त्रिंशांशकस्तथा राशेर्भाग इत्यभिधीयते" सू० सि० ।

**त्रिंशक** त्रि० त्रिंशता क्रीतः वुन् डिच्च । त्रिंशत्संख्यान्वितद्रव्येण क्रीते वस्तुनि ।

**त्रिंशत्** स्त्री० त्रयोदशतः परिमाणमस्य नि० । १त्रिदशकसंख्यायां २तत्संख्यान्विते च । तत्र संख्येये "निमेषा दश चाष्टौ च काष्ठाः त्रिंशत्तु ताः कलाः। त्रिंशत् कला मुहूर्तः स्यादहोरात्रन्तु तावतः" "त्रिंशद्वर्षो वहेत् कन्यां हृद्यां द्वादशवार्षिकीम्" मनुः "संख्यायां "तस्त्रिंशता अभ्यासः" सू० सि० ।

**त्रिंशत्क** त्रि० त्रिंशत्परिमाणमस्य कन् । १त्रिंशत्परिमाणे अवयवे कन् । २तत्संख्यायाम् "अमात्यास्तुः पृथक् तेषां त्रिंशत्कं परिचक्षते" कामन्द० ।

**त्रिंशति** स्त्री त्रिंशत्+पृषो०। १त्रिंशत्संख्यायां २तत्संख्येये च ।"पञ्चकं मण्डलं जप्यं त्रिंशत्याश्च मनीषिभिः"काश०

**त्रिंशत्तम** त्रि० त्रिंशतः पूरणः तमप् । १त्रिंशत्संख्यापूरणे स्त्रियां ङीप् । "ततस्त्रिंशत्तमे व्यूहे पङ्क्तिष्वतिष्ठन्" शत० ब्रा० १०।४।२।२२ ।

**त्रिंशत्पत्र** न० त्रिंशत्संख्यानि पत्राणि दलानि प्रतिपुष्पमस्य । १कुमुदे शब्दमाला ।

**त्रिंशांश** पु० त्रिंशत्स्त्रिंशत्पूरणोऽंशः । राशेस्त्रिंशत्पूरणे भागे षष्टिकलात्मके भागे पञ्चवर्गान्तर्गतानां राशिभेदे तेषामंशविशेषाणामधिपतयः ज्यो० उक्ता यथा

"पञ्च पञ्चाष्टसप्ताश्च विषमे त्रिंशदंशकाः । माहेयशनिजीवज्ञशुक्राणां व्युत्क्रमात् समे" । विषमराशौ कुजशनिगुरुबुधशुक्राणां पञ्च पञ्चाष्टसप्तपञ्चमितास्त्रिंशांशकाः क्रमात् ज्ञेयाः । समे राशौ व्युत्क्रमात् तेषां विपर्ययेण त्रिंशांशा ज्ञेयाः । यथा मेषो विषमराशिः तत्र प्रथमावधिपञ्चांशा भौमस्य । षष्ठांशमारभ्य दशमांशपर्य्यन्तं पञ्चांशाः शनेः । एकादशांशमारभ्याष्टादशांशपर्य्यन्तमष्टावंशा गुरोः । ऊनविंशांशमारभ्य पञ्चविंशांशपर्य्यन्तं सप्तांशा बुधस्य । ततः षड्विंशांशमारभ्य त्रिंशांशपर्य्यन्तं पञ्चांशाः शुक्रस्य त्रिंशांशाः क्रमात् ज्ञेयाः। मिथुनसिंहतुलाधनुःकुम्भेष्वप्येवम् । समराशौ व्युत्क्रमाद्यथा । वृषे प्रथमांशमारभ्य पञ्चांशा भृगोः । ततो द्वादशांशपर्य्यन्तं सप्तांशा बुधस्य, ततो विंशांशपर्य्यन्तमष्टावंशा गुरोः । ततः पञ्चविंशांशपर्यन्तं पञ्चांशाः कुजस्य त्रिंशांशाः । एवं कर्ककन्यावृश्चिकमकरमीनेष्वपि बोध्याः। त्रिंशदंशका इत्यत्र इत्तौ त्रिभागवत् पूरणार्थता

**त्रिंशिन्** त्रि०त्रिंशत् प्रमाणमस्य इनि डिच्च । त्रिंशत्प्रमाणे स्त्रियां ङीप् ।

**त्रिक** न०त्रयाणां संघः कन् ।१त्रित्वसङ्ख्यायाम् २पृष्ठवंशाधोभागे,३कटिभागे,४त्रिफलायाम् (हरितक्यामलकीबयस्याफलत्रये) ५त्रिकटुनि, (शुण्ठीपिप्पलीमरिचत्रये) । वातादिषु मिलितेषु त्रिषु कायति कै-क । ६गोक्षुरे पु० अमरः । ७त्रिपथसंस्थाने हेम० । दक्षिणदे "गुडूचीसारसंयुक्तात् त्रिकत्रयसमन्वयात् । वातरक्तं निहन्त्याशु सर्वरोगहरस्तथा"मुग्धबोधः त्रिफलत्रं त्रिकटुत्रिमदम् त्रिफलम् चेति त्रयमित्यर्थः।"मुनं वक्षस्थलारविवर्त्तिनस्त्रिकः" माघः । "अपोढपार्श्वैरववर्त्तितत्रिका" किरा० । "त्रिफला तु फलत्रिकम् "कश्चिद्विवृत्तत्रिकभिन्नहारः" रघुः । "एकं द्विकं त्रिकं चैव चतुष्कं पञ्चकं तथा" हरिका० । हतीयेन रूपेण ग्रहणं यस्य कन् पूरणप्रत्ययस्य वा लुक् । ८तृतीयके त्रि० । त्रयः अधिकाः अस्मिन् लाभो वृद्धिर्वा यत्र शतादौ १०त्र्यधिकलाभादियुक्ते शतादौ । "द्विकं त्रिकं चतुष्कञ्च पञ्चकञ्च शतं समम् । मासस्य वृद्धिं गृह्णीयात् वर्णानामनुपूर्वशः"मनुः। (शतकरा तिनटाका सुद) "त्रिकगस्य तोः पृष्ठवंशाद्ययोर्योः सन्धिस्तत्त्रिकं स्मृतम्" इत्युक्ते ११वास्तुभेदे न०।

**त्रिककुद्** पु० त्रीणि ककुदस्थानि शृङ्गाण्यस्य ककुदस्य अन्त्यलोपः समा० । त्रिकूटाख्ये पर्वतभेदे अमरः । पर्वत एवास्य अन्त्यलोपः नान्यत्र । तत्र त्रिककुद तद्युक्ते त्रि० । २विष्णावपि पु० वा अन्त्यलोपः । "तथैवाहं त्रिककुदो वाराहं रूपमास्थितः । त्रिककुप् तेन विख्यातः शरीरस्य प्रमापणात्" भा० शा० ३४३ अ० । ३दशरात्रसाध्ये यज्ञभेदेऽपि वा अन्त्यलोपः । "त्रिककुद्वा एष यज्ञो यद्दशरात्रः ककुत् पञ्चदशः ककुदेकविंशः ककुत्त्रयस्त्रिंशो य एवं विद्वान् दशरात्रेण यजते त्रिककुद् एव समानानाम्" तै०सं०७।२।५।२ । "चतुष्टोमात् समूढात् त्रिककुदः शस्त्रम् अथ महात्रिककुदश्च, छन्दोमत्रिककुदश्च" शा० श्रौ० १६।२८।१४ । "यत्र वा इन्द्रो वृत्रमहंस्तस्य यदक्ष्यासीत्तं गिरिं त्रिककुदमकरोत्" शत० ब्रा०३।१।३।१२।"वर्षिष्ठः पर्वतानां त्रिककुन्नाम ते पिता"अथ०४।६।८।

**त्रिककुभ्** पु० त्रेधा कं पीतसदकं स्कुम्नाति स्कुम्भ क्विप् छान्दसः सलोपः । १उदाने वायौ "उदानो वै त्रिककुप्छन्दः शत०ब्रा०८।५।२।४। २नवरात्रसाध्ये यज्ञ-

भेदे । त्रिककुभोऽप्यत्र । त्रिककुबब्यूढः पृष्ठ्यः। महात्रिककुप् व्यूढो नवरात्रः। समूढ़त्रिककुप् समूढ़ः" आश्व॰ श्रौ॰ १०। ३।२१ नवरात्र इत्यनुवर्त्तते, नारा॰ "चतुष्टोम त्रिककुबथ्यूढोऽभिप्लवः एतैश्चतुर्भिः स्वानां श्रैष्ठ्यकामो यजेत । २२ एतैस्त्रिककुम्महात्रिककुप् समूढ़त्रिककुप् चतुष्टोमत्रिककुब्भिः स्वानां श्रैष्ठ्यकामो यजेत । एतेषां दशमो वैश्वानर एव भवति । कामश्चैतेषामेकैकेन सम्बध्यते" नारा॰ ।

**त्रिककुब्धामन्** पु॰ मूर्द्धाधोमध्याभेदेन त्रिरूपाणां ककुभां दिशां समाहारः त्रिककुब् तत् धाम आश्रयो यस्य । विष्णौ विष्णु स॰ । [ गोक्षुरवृक्षे शब्दर॰।

**त्रिकट** पु॰ त्रीन् वातादिदोषान् कटति आवृणोति अच् ।

**त्रिकटु** न॰ त्रयाणां कटुरसानां समाहारः । मिलितेषु शुण्ठीपिप्पलीमरिचेषु हेम॰ । "विश्वोपकुल्यामरिचं त्रयं त्रिकटु कथ्यते । त्र्यूषणं दीपनं हन्ति श्वासकास त्वगामयान् । गुल्ममेहकफस्थौल्य मेदःश्लीपदपीनसान्" भावप्र॰ ।

**त्रिकण्ट** पु॰ त्रयः कण्टाः कण्टका अस्य ।१गोक्षुरे २स्नुहीवृक्षे, च रत्नमा॰।(टेङ्गरा)३मत्स्यभेदे शब्दर॰।४पत्रगुप्ते शब्दच॰। इङ्गुदीदमनीदुःस्पर्शात्मके ५वृक्षे राजनि॰।

**त्रिकण्टक** पु॰ स्त्री लघुगर्गमत्स्ये त्रिका॰ स्वमा॰ द्वि॰ । २कण्टकत्रये स्त्री। ततः परिमाणे रजता॰अञ् । त्रैकण्टक तत्परिमाणे । त्रयः कण्टका अस्य । ३गोक्षुरवृक्षे पु॰ हेमच॰।४कण्टकत्रयान्विते त्रि॰ ।

**त्रिकद्रुक** पु॰ज्योतिर्गौरायुरित्येतन्नामके "अभिप्लवाहस्त्रिके "अभिप्लवत्र्यहं पूर्वं त्रिकद्रुका इत्याचक्षते" आश्व॰श्रौ॰११। १।११ त्रिकद्रुकेषु पाहि सोममिन्द्र!" ऋ॰२।११।१७ "त्रिकद्रुकेषु ज्योतिर्गौरायुरित्येतन्नामकेषु आभिप्लविकेष्वहःसु" भा॰ "त्र्यहार्थे ज्योतिर्गौरायुरिति त्रिकद्रुकाः" कात्या॰ श्रौ॰ २४।१।६ त्रिकद्रुक इति ज्योतिरादीनां समुदितानां संज्ञा संव्यवहारार्था" कर्कः "त्रिकद्रुकाः पृष्ठावलम्बत्र इति पशुकामस्य" आश्व॰ श्रौ॰ ।१०।२।१९ ।

**त्रिकर्म्मन्** पु॰ त्रीणि कर्म्माण्यस्य । यजनं याजनञ्चैव तथा दानप्रतिग्रहौ । अध्यापनञ्चाध्ययनं षट् कर्मा धर्मभाग् द्विजः" भा॰ अनु॰ १२१ अ॰ । उक्तेषु षट्सु कर्मसु मध्ये हृत्यर्थयाजनप्रतिग्रहाध्यापनभिन्नाहृत्यर्थदाने-ज्याध्ययनरूपकर्मकारिणि द्विजे। "त्रैविद्यो ब्राह्मणो विद्वान् न चाध्ययनजीवकः। त्रिकर्मा त्रिपरिक्रान्तो मैत्र एव स्मृतः द्विजः" भा॰ अनु॰ १४१ अ॰ ।

**त्रिकश** न॰ त्रिरूपाणां कशानां तदाघातानां समाहारः। कशाघातत्रये । कशाघातत्रिकञ्च कशशब्दे१८२४पृ॰दर्शितम् ।

**त्रिकशूल** न॰ ६त॰ । वातजन्ये त्रिकस्थे व्यथाभेदे । "स्फिगस्थ्नोः पृष्ठवंशास्थ्नोर्यः सन्धिस्तत्त्रिकं स्मृतम् । तत्र वातेन या पीड़ा त्रिकशूलं तदुच्यते" भावप्र॰ ।

**त्रिका** स्त्री त्रिधा कायति कै–क । कूपसमीपस्थे जलोद्धारके त्रिदारुमये यन्त्रभेदे चीरस्वामी ।

**त्रिकाण्ड** पु॰ त्रीणि काण्डान्यस्य । स्वर्गवर्गादिकाण्डभूमिवर्गादिकाण्डसामान्यकाण्डरूपात्मके नामलिङ्गानुशासने अमरसिंहकृते १कोषभेदे तस्यैव शेषभूतत्रिकाण्डशेषः पुरुषोत्तमकृतः यथाह तदुपोद्घाते "अलौकिकत्वादमरः स्वकोषे न यानि नामानि समुल्लिलेख। विलोक्य तैरप्यधुना प्रचारमयं प्रयत्नः पुरुषोत्तमस्य" । २निरुक्ते तदपि त्रिकाण्डं तच्चानुक्रमणिकाभाष्ये दर्शितम् यथा "आद्यं नैघण्टुकं काण्डं द्वितीयं नैगमं तथा । तृतीयं दैवतं चेति समाम्नायस्त्रिधा मतः"। त्रयाणां काण्डानां समाहारः ङीप् । त्रिकाण्डी ३काण्डत्रये स्त्री । त्रीणि काण्डानि प्रमाणमस्य मात्रच् द्विगोस्तस्य लुकि चेत्परत्वे ङीप् त्रिकाण्डी चेत्भक्तिः । त्रिकाण्डमिते रज्ज्वादौ स्त्री टाप् ।

**त्रिकाय** पु॰ त्रयः काया अस्य त्रिकं दुःखत्रिकमेत्यस्मात् इ-अपादाने अच् वा । बुद्धदेवे हेमच॰ ।

**त्रिकार्षिक** न॰ कर्षाय हितम् ठक् त्रयाणां वातपित्तकफानां कार्षिकम् । नागरातिविषामुस्तारूपे मिलिते औषधभेदे राजनि॰ ।

**त्रिकाल** न॰ त्रयाणां कार्य्यकालभूतभविष्यत्कालानां समाहारः । १भूतभविष्यद्वर्त्तमानकालत्रये २प्रातर्मध्याह्नरूपकालत्रये च । "त्रिकालं पूजयेद्देवीम्" इति तन्त्रम् । त्रिकालज्ञः । त्रयः काला अस्य । ३कालत्रयवर्त्तिनि त्रि॰ । "साम्प्रतकालं बाह्यं त्रिकालमाभ्यन्तरं करणम्" सां॰ का॰ । करणस्य मनसः त्रिकालबुद्ध्यादिसाधनत्वं यथा "नदीपुरभेदादभूद्वृष्टिः, अस्ति धूमादग्निरिह नगनिकुञ्जे, असत्युपघातके पिपीलिकाण्डसञ्चरणाद्भविष्यति वृष्टिरिति । तदनुरूपाश्च सङ्कल्पाभिमानाध्यवसाया भवन्ति" सा॰ कौ॰ ।

**त्रिकालज्ञ** पु॰ त्रिकालवर्त्तिपदार्थान् जानाति ज्ञा–क । १सर्वज्ञे त्रिकालविदादयोऽप्यत्र । २भूतभविष्यद्वर्त्तमानकालाभिज्ञे त्रि॰ । "बुद्धं यथा यदा वा भविष्यदादिश्यते त्रिकालज्ञैः" कु॰स॰ १७ अ॰। त्रिकालवेत्ताप्यत्र ।

